# आश्वलायनगृह्यकारिकाः

https://sa.wikisource.org/s/19wk

- भट्ट कुमारिल स्वामि

[अ० २ ख० २) भट्टकुमारिलस्वामिप्रणीताः अथ द्वितीयोऽध्यायः ।

१ श्रवणाकर्म ।

ब्रुवेऽथ श्रवणाकर्म सर्पबल्याख्यकर्म च । कुर्वन्ति श्रावणे मासि पौर्णमास्यामिदं द्वयम्

पूरयेदह्नि कलशं नवं यावकसक्तुभिः । निधाय तं नवे शिक्ये दर्वी वैकङ्कतीमपि ।।

प्राच्यां दिशि शुचिं देशं बल्यर्थं परिगृह्य च । यवधाना विमज्यैकं भागमभ्यज्य सर्पिषा आदित्येऽस्तमिते कुर्यादन्वाधानादि पूर्ववत् । हविर्द्वयस्य तूष्णीं स्तो निर्वापप्रोक्षणे इह पुरोवदवघातादि स्याद्विभज्य च तण्डुलान् । तत्रैकेन पुरोडाशमन्येन श्रपयेच्चरुम् ।।

एकस्मिंस्तु पुरोडाशं कपाले श्रपयेदिह । आज्येन सह धानानां पर्यग्निकरणं भवेत् ।।

आज्यस्य केवलोत्पूतौ तासां त्रिः प्रोक्षणं भवेत् । (चरुमासादयेत्पूर्वं पुरोडाशमतः परम्) बर्हिष्याज्यान्तरे कृत्स्नं पुरोडाशं निमज्जयेत् । प्रकाशपृष्ठमथवा पुरोडाशं निमज्जयेत्

अथ कृत्वाऽऽज्यभागान्तं चर्वाहुतिचतुष्टयम् । हुत्वा चतुष्टयेनाग्ने नयेति प्रत्यृचं ततः। उपस्तीर्याथ सव्येन दक्षिणे प्रोक्षिते करे । सव्येनैककपाल तमोप्य कृत्स्नमखण्डितम् ।। उपरिष्टात्तु सव्येन कुर्याद्द्विरभिघारणम् । अच्युतायेति मन्त्रेण दक्षिणेन जुहोत्यथ ।। यस्मिन्नाज्ये निमग्नोऽयं स्रुवेणैव जुहोति तत् । उपर्येककपालस्य मानो अग्ने इति त्यृचा अथोपस्तरणाद्यन्यः करोति गृहिणोऽञ्जलौ । स तेन जुहुयादक्ता धानाः शं नो भवन्त्विति

यास्तु धाना अनभ्यक्ता पुत्रादिभ्यो ददाति ताः । अथ स्विष्टकृतं हुत्वा चरुधानैकदशेतः परिषेचनपर्यन्तं होमशेषं समापयेत् । इत्युक्तं श्रवणाकर्म सर्पबल्यामुख्यच्यते ।। १५ ।। ( ४५२) इति श्रवणाकर्म । २ सर्पबलिः ।

अथ प्रपूरयेद्दर्वी सक्तुभिः कलशस्थितैः। गृहात्प्रागुपनिष्क्रम्य शुचौ देशेऽह्नि कल्पिते

अप आसिच्य तानोप्य सर्पदेवेति मन्त्रतः । नान्तरा बलिमात्मानं व्यवेयादिह कश्चन ।। व्यवायस्य निषेधोऽयमुक्त आपरिदानतः । ये सर्पा इति मंत्रेण नमस्कुर्यात्कृताञ्जलिः ।।

बलिं प्रदक्षिण कृत्वा पश्चादस्योपविश्य च । सर्पोऽसीत्यादिक मन्त्रं ददाम्यन्तं सकृद्वदेत्

ध्रुवामुं ते परिददाम्येतमुक्त्वा निवेदयेत् । ज्येष्ठानुक्रमतः पुत्रानप्रत्तदुहितृस्तथा ।। ५ ।।

ततः पत्नी ध्रुवामुं त इत्याद्यावर्ततेऽत्र तु । वाच्यं पुत्रादिनामात्र द्वितीयान्तममुंपदे ।।

ध्रुवमात्मेति चाऽऽत्मानं ततः परिददाति सः । अन्यः कुर्वंति चैदाह गृहिणो नाम मांपदे

सान्नं प्रातश्च मन्त्रेण तेनाप्रत्यवरोहणात् । बलिमेव हरेन्नेह नमस्कारादिरिष्यते ।।८।।

सायं प्रातश्च यावन्तः कालाः स्युस्तद्दिनादधः । तावतो वा बलींस्तस्मिन्नेवाहनि हरेदथ ।। ९ ।। ( ४६१) इति सर्पबलिः ।